पञ्चमं ति पञ्चमीं प्रतिमाप्रतिमां[१] कायोत्सर्गप्रतिमामित्यर्थः। स्वरूपं चास्याः।

सम्मत्तणुव्वयगुणव्वयसिक्खावयवं थिरो य नाणी य।
अट्ठमिचउद्दसीसुं पडिमं ठा एगराईयं[२] ॥
असिणाणवियडभोई मउलिकडो[३] दिवसबम्भयारी य।
राइं परिमाणकडो पडिमावज्जेसु दियहेसु ॥
झायइ पडिमाए ठिओ[४] तिलोयपुज्जे जिणे[५] जियकसाए।
नियदोसपच्चणीयं अन्नं वा पञ्च जा मासा ॥

अस्नानो ऽरात्रिभोजी चेत्यर्थः। मुकुलकच्छ[६] इत्यर्थः ॥

छट्ठं ति षष्ठीं अब्रह्मवर्जनप्रतिमाम्। एतत्स्वरूपं चैवम्।

पुव्वोदियगुणजुत्तो विसेसओ विजियमोहणिज्जो[७] य।
वज्जइ अबम्भमेगन्तओ उ राइं पि थिरचित्तो ॥
सिङ्गारकहाविरओ इत्थीए समं रहम्मि[८] नो ठाइ।
चयइ य अइप्पसङ्गं तहा विभूसं च उक्कोसं ॥
एवं जा[९] छम्मासा एसो हि गओ उ[१०] इयरहा दिट्ठं।
जावज्जीवं पि इमं वज्जइ एयम्मि लोगम्मि ॥

सत्तमं ति सप्तमीं सचित्ताहारवर्जनप्रतिमामित्यर्थः। इयं चैवम्।

सच्चित्तं आहारं वज्जइ असणाइयं निरवसेसं।
सेसपयसमाउत्तो[११] जा मासा सत्त विहिपुव्वं ॥

---

१ e has only प्रतिमां omitting प्रतिमा, e प्रतिमां प्रतिमं। २ a एगराइयम्। ३ e मउलीकडो। ४ a f h ठिओ। ५ e om. जिणे। ६ a मुकुलकच्छ; e e मुकुलकच्छ: cf. मुकुलकच्छ। ७ e e विजय०। ८ e रहंमि। ९ e e जावज्जमा। १० e e om. उ। ११ a ०मय०।

अट्ठमं ति अष्टमीं स्वयमारम्भवर्जनप्रतिमाम् । तद्रूपमिदम् ।

वज्जइ सयमारम्भं सावज्जं, कारवेइ पेसेहिं ।

वित्तिनिमित्तं पुव्वयगुणजुत्तो अट्ठ जा मासा ॥

नवमं ति नवमीं भृतकप्रेष्यारम्भवर्जनप्रतिमाम्[१] । सा चेयम् ।

पेसेहिं आरम्भं सावज्जं कारवेइ नो गुरुयं ।

पुव्वोइयगुणजुत्तो नव मासा जाव विहिणा ओ[२] ॥

दसमं ति दशमीं उद्दिष्टभक्तवर्जनप्रतिमाम् । सा चैवम् ।

उद्दिट्ठकडं भत्तं पि वज्जए किमुय सेसमारम्भं ।

सो होइ उ[३] खुरमुण्डो सिहलिं वा धारए[४] कोइ ॥

दव्वं पुट्ठो जो[५] णं जाणेइ वयइ[६] नो वेइ (?) ।

पुव्वोदियगुणजुत्तो दस मासा कालमाणेणं[७] ॥

एक्कारसमं ति एकादशीं श्रमणभूतप्रतिमाम् । तत्स्वरूपं चैतत् ।

खुरमुण्डो लोए णं[८] रयहरणं[९] ओग्गहं[१०] च घेत्तूणं ।

समणब्भूओ विहरइ धम्मं काएण फासेन्तो[११] ॥

एवं उक्कोसेणं एक्कारस मास[१२] जाव विहरेइ ।

एक्काहाइपरेणं[१३] एवं सव्वत्थ पाएणं ॥

इति ॥

॥ ७२ ॥ उरालेणमित्यादिवर्णको मेघकुमारतपोवर्णक इव व्याख्येयः । यावदनवकाङ्क्षन्विहरतीति ॥

---

१ The reading of this clause and verse is very corrupt in c. २ a उ । ३ e om. उ । ४ a e धारवे कोति, c धारए कोवि । ५ c जा यं, e जाणे । ६ a इयरनोवेति, c वयइमोयनोवेइ, e वयइनोवेति । ७ c ॰आसेणं । ८ a ण य, c य, e om. ९ c यरहरणं, e यवरहरण । १० a c उग्गहं, e पडिग्गहं । ११ c e फासन्तो । १२ a मासल जाव । १३ c एक्काहाईय ।

॥ ८३ ॥ गिहमज्झावसन्तस्स त्ति गृहमध्यावसतः, गेहे वर्तमानस्येत्यर्थः ॥

॥ ८५ ॥ सन्नाणमित्यादय[1] एकार्थाः शब्दाः ॥

॥ ८६ ॥ गोयमा इ त्ति हे गौतम इत्येवमामन्त्र्येति ॥

निक्खेवओ त्ति निगमनं, यथा "एवं खलु जम्बू समणेणं जाव उवासगदसाणं पढमस्स अज्झयणस्स अयमट्ठे पण्णत्ते त्ति बेमि" ॥

॥ उपासकदशानां प्रथमाध्ययनं समाप्तम् ॥

द्वितीयमध्ययनम् ॥

अथ द्वितीये किमपि लिख्यते ॥

॥ ९३ ॥ पुव्वरत्तावरत्तकालसमयंसि त्ति पूर्वरात्रश्चासावपररात्रश्चेति पूर्वरात्रापररात्रः[2], स एव कालसमयः[3] कालविशेषः ॥

॥ ९४ ॥ तत्र इमेयारूवे वण्णावासे पण्णत्ते त्ति वर्णकव्यासो वर्णकविस्तारः ॥ सीसं ति शिरः । से तस्य । गोकिलञ्ज[4] त्ति गवां चरणार्थं वंशदलमयं[5] महद्भाजनं, तद्गोकिलञ्जं उभे त्ति यदुच्यते, तस्याधोमुखीकृतस्य यत्संस्थानं, तेन संस्थितं तदाकारमित्यर्थः ॥ पुस्तकान्तरे विशेषान्तरमुपलभ्यते । विगयकप्पयनिभं त्ति विकृतो

---

१ a सन्नायम् c e सन्नायम । २ e पूर्वरात्रापररात्र । ३ c काल समयः । ४ a c f गोकिलिंज, but immediately afterwards गोकिलञ्ज as in A B D E F, Skr गोकिलिञ्ज or गोकिलिञ्ज, cf Marathi किलञ्ज or किलीच । ५ e •वंशदलमहद्भाजनं ।

योऽलञ्जरादीनां[1] कल्प एव कल्पकः छेदः खण्डं कर्परमिति तात्पर्यं, तन्निभं तत्सदृशमिति॥ क्वचित्तु वयडकोप्परनिभं त्ति दृश्यते, तच्चो- पदेशगम्यम्॥ सालिभसेलसरिसा सौहिकणिशशूकसमाः[2] से तस्य केशा वालाः। एतदेव व्यनक्ति, कविलतेएणं दिप्पमाणा[3] पिङ्गलदीप्त्या[4] शोभमानाः॥ उट्टियाकभल्लसंठाणसंठियं उष्ट्रिका मृण्मयो महा- भाजनविशेषस्तस्याः कभल्लं कपालं, तस्य[5] यत्संस्थानं तत्संस्थितम्। निडालं ति ललाटम्॥ पाठान्तरे। महल्लउट्टियाकभल्लसरिसोवमे[6] महोष्ट्रिकाकपालसदृशमित्येवमुल्लेखेनोपमा[7] उपमानवाक्यं यत्र त- त्तथा॥ मुगुंसपुंछं[8] व भुजपरिसर्पविशेषो मुगुंसा, सा[9] च खाड- हिल त्ति सम्भाव्यते, तत्पुच्छवत्। तस्येति पिशाचरूपस्य भुम- गाओ[10] त्ति भ्रुवौ प्रस्तुतोपमार्थमेव व्यनक्ति, फुग्गफुग्गाओ[11] त्ति परस्परासम्बद्धरोमिके विकीर्णविकीर्णरोमिके[12] इत्यर्थः॥ पुस्तका- न्तरे तु जडिलजडिलाओ[13] त्ति प्रतीतम्॥ विगयबीभच्छदंसणाओ त्ति विकृतं बीभत्सं च दर्शनं रूपं ययोस्ते तथा॥ सीसघडिविणिग्ग- याणि शीर्षमेव घटी तदाकारत्वात् शीर्षघटी[14], तस्या विनि- र्गते इव विनिर्गते शिरोघटीमतिक्रम्य व्यवस्थितत्वात्। अच्छीणि लोचने, विकृतबीभत्सदर्शने प्रतीतम्॥ कर्णौ श्रवणौ यथा शूर्प-

१ a e f अलञ्जरादीनां। २ a f सौहि॰। ३ a f दिप्पमाणे, apparently intended as a nom. plur. ending in ए, see E. Müller's *Beiträge zur Jaina Grammatik*, p 50, Bhag. p. 418. ४ a f पिंगल॰। ५ e तत्संस्थानं। ६ e सरिस॰। ७ e ॰सदृशमित्येव समुल्लेखेनोपमा। ८ e मगुंसपुच्छं, f मुंगुस॰। ९ e om. सा। १० e भुमगाउ, f भुमगाउ। ११ a फुग्गाओ। १२ e om. one विकीर्ण। १३ a f जडिलजडिलाउ, e जडिलजडिलाउ। १४ e ॰घटिः।

कर्त्तरमेव शूर्पखण्डमेव नान्यथाकारौ टप्पराकारावित्यर्थः । विकृते-
त्यादि तथैव ॥ उरब्भपुडसन्निभा उरब्भ उरणस्तस्य[1] पुटं नासा-
पुटं, तत्सन्निभा तत्सदृशी नासा नासिका ॥ पाठान्तरेण[2] ऊरब्भ-
पुडसंठाणसंठिया, तत्र ऊरब्भा[3] वाद्यविशेषस्तस्याः पुटं पुष्करं
तत्संस्थानसंस्थिता[4] अतिचिपिटत्वेन[5] समत्वादिति ॥ झुसिर त्ति
सच्छिद्रा, जमलचुल्लीसंठाणसंठिया यमलयोः समस्थितद्वयरूपयो
श्चुल्ल्योर्यत्संस्थानं[6] तत्संस्थिते द्वे अपि तस्य नासापुटे नासिकाविवरे ॥
वाचनान्तरे महल्लकुम्बसंठिया[7] दो वि से[8] कवोला, तत्र चीण-
मांसत्वादुन्नतास्थित्वाच्च[9] कुम्बं[10] ति निम्नं स्थानमित्यर्थः । तत्सं-
स्थितौ द्वावपि से तस्य कपोलौ गण्डौ ॥ तथा घोडय[11] त्ति
घोटकपुच्छवदस्य वालधिवत्तस्य पिशाचरूपस्य श्मश्रूणि[12] कूर्चकेशाः ।
तथा कपिलकपिलानि अतिकडाराणि विकृतानीत्यादि तथैव ॥
पाठान्तरेण घोडयपुंछं[13] व तस्स कविलफरुसाओ उद्धलोमाओ[14]
दाढियाओ[15], तत्र परुषे[16] कर्कशस्पर्शे ऊर्ध्वरोमिके[17] न तिर्यगव-
नते इत्यर्थः । दंष्ट्रिके उत्तरौष्ठरोमाणि[18] ॥ ओष्ठौ[19] दशनच्छदौ

उष्ट्रस्येव लम्बौ[१] प्रलम्बमानौ ॥ पाठान्तरेण उट्टा से घोडगस्स जहा दो वि लम्बमाणा ॥ तथा फाला[२] लोहमयकुशाः, तत्सदृशा दीर्घत्वात्, से तस्य दन्ता दशनाः[३] ॥ जिह्वा यथा शूर्पकर्तरं सैव नान्यथाकारा, विकृतेत्यादि तदेव ॥ पाठान्तरे हिङ्गुलुयधाउकन्दरविलं व[४] तस्स वयणं इति दृश्यते । तत्र हिङ्गुलुको वर्णद्रव्यं तद्रूपो धातुर्यत्र तत्, तथाविधं यत्कन्दरविलं गुहालक्षणं रन्ध्रं तदिव तस्य वदनम् ॥ हलकुद्दाल[५] हलस्योपरि ततो भागः, तत्संस्थिते तदाकारे अतिवक्रदीर्घे से तस्य हणुय त्ति दंष्ट्राविशेषौ[६] ॥ गल्लकडिल्लं च तस्स त्ति गल्ल एव कपोल एव कडिल्लं तप्तकादिपचनभाजनं गल्लकडिल्लं, चः[८] समुच्चये, तस्य पिशाचरूपस्य । खड्ड[९] त्ति गर्त्ताकारं[१०] निम्नमध्यभागमित्यर्थः । फुट्टं ति विदीर्णं, अनेनैव साधर्म्येण[११] कडिल्लमित्युपमानं कृतम् । कविलं ति वर्णतः । फरुसं ति स्पर्शतः । महल्लं ति महत् ॥ तथा मृदङ्गाकारेण मर्दलाकृत्या उपमा यस्य स मृदङ्गाकारोपमः । से तस्य स्कन्धोऽंसदेशः ॥ पुरवरे[१२] त्ति पुरवरकपाटोपमं से तस्य वक्ष उरःस्थलं विस्तीर्णत्वादिति ॥ तथा कोष्ठिका[१३] लोहादिधातुधमनार्थं मृत्तिकामयी कुशूलिका[१४], तस्या यत्संस्थानं तेन संस्थितौ तस्य द्वावपि बाहू भुजौ स्थूलावित्यर्थः ॥ तथा निसापाहाणे त्ति मुद्गा-

---

१ c inserts प्रलंबे । २ a f फालाः । ३ a f दशनं । ४ a e f च । ५ a f ०कुद्दा, e कुद्दाल त्ति । ६ e विशेषो । ७ a च । ८ e च । ९ e खड्ड, Marāṭhī खड्डा । १० e गर्त्ताकारं । ११ e f साधर्म्येण । १२ a f om. १३ a e f कोठिका । १४ a e f कुशलिका ।

दिद्लनशिला, तत्संस्थितौ पृथुलत्वस्थूलत्वाभ्यां, द्वावपि अग्रहस्तौ भुजयोरग्रभूतौ करावित्यर्थः[१]। तथा निशालोढे[२] त्ति शिलापुत्रकः, तत्संस्थानसंस्थिता हस्तयोरङ्गुल्यः स्थूलत्वदीर्घत्वाभ्याम् ॥ तथा सिप्पिपुडं त्ति शुक्तिसम्पुटस्यैकं दलं, तत्संस्थितास्तस्य नक्ख त्ति नखा हस्ताङ्गुलिसम्बन्धिनः ॥ वाचनान्तरे तु इदमपरमधीयते । अड्डयालगसंठिओ[३] उरो तस्स रोमगुविलो[४] त्ति अत्र अड्डयालग[५] त्ति अट्टालकः प्राकारावयवः[६] सम्भाव्यते तत्साधर्म्यं चोरसः क्षामत्वादिनेति ॥ तथा एहावियपसेवओ[७] व्व त्ति नापितप्रसेवक[८] इव नखशोधकक्षुरादिभाजनमिव, उरसि वक्षसि, लम्बेते[९] प्रलम्बमानौ तिष्ठतः[१०], द्वावपि तस्य स्तनकौ वक्षोजौ ॥ तथा पोट्टं जठरं, अयःकोष्ठकवल्लोहकुसूलवद्वृत्तं[११] वर्तुलम् ॥ तथा पानं धान्यरससंस्कृतं जलं येन कुविन्दाश्चीवराणि पाययन्ति तस्य कलन्दं कुण्डं पानकलन्दं, तद्वद्गम्भीरतया से तस्य नाभिर्जठरमध्यावयवः ॥ वाचनान्तरेऽधीतं भग्गकडी विगयवंकपट्ठी[१२] असरिसा दो वि तस्स फिसगा । तत्र भग्नकटिर्विकृतवक्रपृष्ठः[१३], फिसकौ[१४] पुतौ ॥ तथा शिककं[१५] दध्यादिभाजनानां दोरकमयमाकाशे[१६]ऽवलम्बनं[१७] लोकप्रसिद्धं[१८], तत्संस्थानसंस्थितं से तस्य नेत्रं मथितदण्डा-

१ a f करौ इत्यर्थः । २ e निसालोढो । ३ c अड्डालग॰ । ४ e रोम विलो । ५ a e f अड्डयाल । ६ e प्रकारावयवः । ७ a f ॰पसेवउ व्व त्ति, e ॰पसेवउ त्ति । ८ e नापित नरप्रसेवक । ९ c लंबि त्ति । १० a f तिष्ठतः । ११ a e f ॰कोष्ठक॰ । १२ e ॰पिट्ठी (see Hem. I. 35, 129). १३ a f ॰पृष्ठः, e पृष्ठिः । १४ Skr. properly स्फिचौ । १५ a f सिक्कगं, e सिक्कगं । १६ a e f दवरकमयम् । १७ a f अवलंबनं । १८ e लोके प्रसिद्धं ।

कर्पणरज्जुः[1], तद्दीर्घतया[2] तन्नेव शेफ[3] उच्यते ॥ तथा किण्णपुडसंठाणसंठिय त्ति सुरागोणकरूपतण्डुलकिण्वभृतगोणीपुटद्वयसंस्थानसंस्थिताविति[4] सम्भाव्यते । द्वावपि तस्य वृषणौ पोत्रकौ ॥ तथा जमलकोट्ठिय त्ति समतया व्यवस्थापितकुशूलिकाद्वयसंस्थानसंस्थितौ[5] द्वावपि तस्य ऊरू[6] कहे ॥ तथा अज्जुणगुट्ठं[7] व त्ति अर्जुनस्तृणविशेषस्तस्य गुट्ठं[8] स्तम्बस्तद्वदस्य[9] जानुनी । अनन्तरोक्तोपमानस्य[10] साधर्म्यं व्यनक्ति । कुटिलकुटिले अतिवक्रे विकृतबीभत्सदर्शने ॥ तथा जङ्घे जानुनोरधोवर्तिन्यौ[11] । कक्खडीओ[12]- त्ति कठिने निर्मांसे इत्यर्थः । तथा रोमभिरुपचिते ॥ तथा अधरी पेषणशिला, तत्संस्थानसंस्थितौ द्वावपि तस्य पादौ ॥ तथा अधरीलोष्टः शिलापुत्रकः, तत्संस्थानसंस्थिताः पादयोरङ्गुल्यः ॥ तथा[13] शुक्तिपुटसंस्थिताः से तस्य पादाङ्गुलिनखाः ॥

॥ ८५ ॥ केशाग्रान्नखाग्रं यावद्वर्णितं पिशाचरूपमधुना सामान्येन तद्वर्णनायाह । लडहमडहजाणुए[14] त्ति इहप्रस्तावे लडहशब्देन गव्याः पश्चाद्भागवर्ति तदुत्तराङ्गरक्षणार्थं[15] यत्काष्ठं[16] तदुच्यते, तच्च गव्यां श्लथबन्धनं भवति, एवं च श्लथसन्धिबन्धनत्वाल्लडहे[17] इव, लडहे मडहे च स्थूलत्वाल्पदीर्घत्वाभ्यां जानुनी यस्य तत्तया ॥ विकृते

---

१ c मिंढि० । २ a f तद्दीर्घतया । ३ a f शेफा । ४ a ०संठुर्थ ; a f विधु० । ५ a f व्यवस्थापित० । ६ a f ऊरुकटे, c ऊरू कटे । ७ a f ऊज्जुए० ; a f ०खुडं, c ०खुडं । ८ a f खुडं, c खुडं । ९ c ०स्तस्य । १० a ०पमानसाधर्म्यं । ११ a ०वर्त्तिन्यौ० । १२ a c f कक्खडीउ त्ति । १३ a c f om. १४ a f ०जाणुए । १५ a f तदुत्तरमरक्षणार्थं, c तदुत्तरक्षणार्थं । १६ a f यत्काष्ठं । १७ c श्लथसंधिबन्धनत्वाल्लडह ।

विकारवत्यौ, भग्ने[१] विसंष्ठुलतया[२], भुग्ने[३] वक्रे भ्रुवौ यस्य पिशाचरूपस्य तत्तथा ॥ इहान्यदपि विशेषणचतुष्टयं वाचनान्तरे[४]ऽधीयते । मसि-मूसगमहिसकालए[५] मषीमूषिकामहिषवत्कालकम् । भरियमेहवण्णे[७] जलभृतमेघवर्णं कालमेवेत्यर्थः । लम्बोट्ठे निग्गयदन्ते प्रतीत-मेव[८] तथा ॥ अवदारितं विस्तारितं वदनलक्षणं विवरं येन तत्तथा । तथा निर्लालिता निष्कासिता[९] अग्रजिह्वा जिह्वाया अग्रभागो येन तत्तथा । ततः कर्मधारयः ॥ तथा शरटैः[१०] कृकलासैः कृता[११] मालिका स्रक् मुण्डे वक्षसि वा येन तत्तथा ॥ तथा[१२] उन्दुरमा-लया[१३] मूषिकस्रजा[१४] परिणद्धं परिगतं सुकृतं सुष्ठु[१५] रचितं चिह्नं स्वकीयलाञ्छनं येन तत्तथा ॥ तथा नकुलाभ्यां बभ्रुभ्यां कृते कर्णपूरे आभरणविशेषौ येन तत्तथा ॥ तथा[१६] सर्पाभ्यां कृतं वैकक्ष-मुत्तरासङ्गो येन तत्तथा[१७] ॥ पाठान्तरेण मूसगकयचुभलए[१८] विच्छुय-कयवच्छे[१९] सप्पकयजण्णोवइए[२०], तत्र चुभलए त्ति[२१] शेखरः[२२], विच्छुय त्ति वृश्चिका, यज्ञोपवीतं ब्राह्मणकण्ठसूत्रम् । तथा अभिन्नमुख-नयननखवरव्याघ्रचित्रकृत्तिनिवसनं[२३] अभिन्ना. अविशीर्णा मुखनयन-

---

१ e भुग्ने । २ a f विसंष्ठुलतया c विसंष्ठुलतया । ३ e भुग्ने । ४ a f °न्तरे अधीयते, e °न्तरे तु अधीयते । ५ a f यत्कालकं । ६ e °मूसग° (see Hem I, 88), e °माहिस° । ७ a f °मेहे वन्न, e °मेहवन्ने । ८ e प्रतीत तत्तथा । ९ a f निष्कासिता । १० a f सरटे । ११ a कृता मालिका स्रक मुंडे वा वक्षसि वा, e कृतमालिकामुंडे वक्षसि वा । १२ e om. १३ e उन्दर°, a f °माला । १४ e मूषक° । १५ a e f सुष्टु । १६ e om. १७ e om तत । १८ a f °चुभलय, e °चुंभलय but see afterwards, the Marathi has चुभल or चुंबल । १९ b विच्छुयवच्छे । २० a c f °जण्णवइए । २१ a f चुंभलय त्ति, e भभुलय त्ति । २२ a c f शषर । २३ e °किति (see Num 110)

नखा यस्यां सा तथा, सा चासौ वरव्याघ्रस्य चित्रा कर्बुरा कृत्तिश्च चर्मेति कर्मधारयः, सा निवसनं परिधानं यस्य तत्तथा। सरस-रुधिरमंसावलित्तगत्ते सरसाभ्यां रुधिरमांसाभ्यामवलिप्तं गात्रं यस्य तत्तथा॥ आस्फोटयन् कारास्फोटं कुर्वन्। अभिगर्जन् घनध्वनिं मुञ्चन्। भीमो मुक्तः कृतो ऽट्टट्टहासो हासविशेषो येन तत्तथा॥ नानाविधपञ्चवर्णैरोमभिरुपचित[1] एकं महन्नीलोत्पलगवलगुलि-कातसीकुसुमप्रकाशमसिं क्षुरधारं गृहीत्वा, यत्र पोषधशाला[2] यत्र कामदेवः श्रमणोपासकस्तत्रोपागच्छतिस्मेति। इह गवलं महिष-शृङ्गं, गुलिका नीली, अतसी धान्यविशेषः, असिः[3] खड्गः, क्षुरस्येव धारा यस्यातिच्छेदकत्वात्सौ क्षुरधारः॥ आसुरुत्ते रुट्ठे कुविए चण्डिक्किए मिसिमिसीयमाणे[4] त्ति एकार्थाः शब्दाः कोपातिशय-प्रदर्शनार्थाः॥ अप्पत्थियपत्थिया अप्रार्थितप्रार्थक[5]॥ दुरन्तानि दुष्टपर्यवसानानि प्रान्तान्यमनोज्ञानि लक्षणानि यस्य स तथा॥ हीणपुण्णचाउद्दसिय[6] त्ति हीना असम्पूर्णा पुण्या चतुर्दशी तिथि-र्जन्मकाले यस्य स हीनपुण्यचतुर्दशीकः, तदामन्त्रणं श्रीह्री-धृतिकीर्त्तिवर्जितेति व्यक्तम्॥ तथा धर्मं श्रुतचारित्रलक्षणं काम-यते ऽभिलाषयति यः स धर्मकामः, तस्यामन्त्रणं हे धम्मकामया। एवं सर्वपदानि। नवरं पुण्यं शुभप्रकृतिरूपं कर्म, स्वर्गस्तत्फलं, मोक्षो धर्मफलं, काङ्क्षा अभिलाषातिरेकः[7], पिपासा काङ्क्षाति-

[1] A °प्पविर्त्त B. C °प्पविरमवेर्ड। [2] C °पोषधशालाया। [3] C असि खड्ग। [4] A I मिसिमिसिमाणे। [5] B I °प्पार्थक, C °प्पार्थित। [6] A I °चाउद्दसि त्ति, C °चाउद्दस त्ति। [7] C °रतिरेकः।

रेकः[१]। एवमेतैः पदैरुत्तरोत्तरो[२] [illegible] प्रकर्ष एवोक्तः ॥ नो खलु इत्यादि न खलु नैव कल्पन्ते [illegible] मिति वस्तु-स्थितिः[२]। केवलं यदि त्वं तान् [illegible] खण्डं करोमीति वाक्य [illegible] णुव्रतानि, व्रतानि दिग्व्रतादीनि, विरमणानि [illegible] रादविरतयः, प्रत्याख्यानानि नम-स्कारसहितादीनि, पोषधोपवासान् आहारादिभेदेन चतुर्विधान्। चालितए भङ्गकान्तरकरणतः, क्षोभयितु एतत्पालनविषयं क्षोभ कर्तुं, खण्डयितुं देशतो, भङ्क्तुं सर्वत.[४], उज्झितुं सर्वस्य।[५] देशविरते-स्त्यागतः, परित्यक्तुं सम्यक्त्वस्यापि त्यागादिति ॥ अट्टदुहट्टवसट्टे त्ति आर्तस्य ध्यानविशेषस्य यो दुहट्ट त्ति दुर्घटो दुःस्थागो[६] दुर्निरोधो वशः पारतन्त्र्य तेन ऋतः पीडितः आर्तदुर्घटवशार्तः। अथवा आर्तेन दुःखार्तः आर्तदुःखार्तः, तथा वशेन[७] विषयपारतन्त्र्येण ऋतः परिगतो वशार्तः, ततः कर्मधारय इति ॥

॥ ८९ ॥ अभीते[८] इत्यादीन्येकार्थान्यभयप्रकर्षप्रदर्शनार्थानि[९] ॥

॥ ९९ ॥ तिवलियं ति त्रिवलीकां भृकुटिं[१०] दृष्टिरचनावि-शेषम् ॥ ललाटे संहृत्य विधायेति ॥

---

१ e °चरितिरेका। २ e उत्तरोत्तराभिलाष°। ३ Instead of वस्तुस्थितिः e reads भेयितुं देशतो भङ्क्तु सर्वत, which has probably wrongly crept in here from the subsequent part of the comm. ४ a f सर्वत। उज्झितु, but a सर्वत उज्झितु, evidently, though wrongly, construct-ing सर्वत with the preceding clause. ५ e सर्वस्य। ६ e दुस्थगो। ७ भृकुटि° adds च। ८ a f अभीत। ९ c अतिभय for अभय। १० a f भृकुटिं, त्रि, c भ्रटी।

॥१०१॥ चलयितुमन्यथा[१] कर्तुम्। चलनं च द्विधा संशय-द्वारेण विपर्ययद्वारेण च। तत्र चोभयितुमिति संशयतो, विपरिणमयितुमिति[२] च विपर्ययतः॥ श्रान्तादयः समानार्थाः॥ मत्तङ्ग-पदष्ठियं ति सप्ताङ्गानि चत्वारः पादाः करः पुच्छं शिश्नं[३] चेति, एतानि प्रतिष्ठितानि[४] भूमौ लग्नानि यस्य तत्तथा॥ मर्म[५] मांसोप-चयात्संस्थितम्॥ गजलक्षणोपेतसकलाङ्गोपाङ्गत्वात्सुजातमिव। सुजातं पूर्णदिनजातम्॥ पुरतोऽग्रत[६] उदग्रं उच्चं समुच्छ्रितशिर इत्यर्थः॥ पृष्ठतः[७] पृष्ठदेशे[८] वराहः शूकरः, स इव वराहः। प्राकृतत्वात्पुंसक-लिङ्गता॥ अजाया इव कुक्षिर्यस्य[९] तदजाकुक्षि॥ अलम्बकुक्षि[१०] बलवत्त्वेन[११]॥ प्रलम्बो दीर्घो, लम्बोदरस्येव गणपतेरिव, अधरः[१२] ओष्ठः, करश्च हस्तो यस्य तत्प्रलम्बलम्बोदराधरकरम्॥ अभ्युद्गतमुकुला आयातकुड्मला या[१३] मल्लिका विचकिलस्तद्वत्, विमलधवलौ[१४] दन्तौ। अथ[१५] वा मकारत्वान्मल्लिकामुकुलवदभ्युद्गतावुन्नतौ विमल-धवलौ[१६] च दन्तौ यस्य तदभ्युद्गतमुकुलमल्लिकाविमलधवलदन्तम्॥ काञ्चनकोशीप्रविष्टदन्तं,[१७] कोशी[१८] प्रतिमा॥ आनामितमीषन्नामितं यच्चापं धनुस्तद्वत् ललिता च विलासवती, संवेल्लिता च येनमी सङ्कोचिता वा, अग्रशुण्डा शुण्डाग्रं यस्य तत्तथा॥ कूर्मवत्कूर्माकाराः प्रतिपूर्णाश्चरणा यस्य तत्तथा॥ विंशतिनखम्॥ आलीनप्रमाणयुक्त-पुच्छमिति कण्ठ्यम्॥

१ e चालयितुम्। २ e विपरिणामयितुम्। ३ a f भिश्नं e शिश्नं। ४ a f प्रतिष्ठितानि। ५ a e f मर्म। ६ a f पुरतो। ७ a f पृष्ठतः। ८ a f पृष्ठदेशे। ९ a e f कुक्षी यस्य। १० e कर्णलम्बकुक्षी। ११ e प्रलम्बतया। १२ e चाधरोष्ठः। १३ e धे। १४ e विमलोधवलौ। १५ e यद्वा for अथ वा। १६ a e विमलधवलदन्तौ। १७ e प्रविष्ट-। १८ e कोशेति।

॥१०७॥ उग्गविसं इत्यादीनि सर्परूपविशेषणानि कचिद्या-वच्छब्दोपात्तानि, कचित्साक्षादुक्तानि[1] दृश्यन्ते ॥ तत्र उग्रविषं दुरधिसह्यविषम् । चण्डविषं अल्पकालेनैव दष्टशरीरव्यापकविषत्वात् । घोरविषं मारकत्वात् । महाकायं महाशरीरम् । मषीमूषाकालकम् । नयनविषेण दृष्टिविषेण रोषेण च पूर्णं नयनविषरोषपूर्णम् । अञ्जन-पुञ्जानां कज्जलोत्करणानां यो निकरः समूहस्तद्वत्प्रकाशो यस्य तदञ्जनपुञ्जनिकरप्रकाशम् । रक्ताक्षं लोहितलोचनम् । यमलयोः समस्थयोर्युगलं द्वयं चञ्चलं[2] चलन्त्योरत्यर्थं चपलयोर्जिह्वयोर्यस्य तद्यमलयुगलचञ्चलजिह्वम् । धरणीतलस्य वेणीव केशबन्धविशेष इव कृष्णत्वदीर्घत्वाभ्यामिति धरणीतलवेणिभूतम् । उत्कटो ऽनभिभव-नीयत्वात्, स्फुटो व्यक्तो भासुरतया दृश्यत्वात्, कुटिलो वक्रत्वात्, जटिलः केशसटायोगात्, कर्कशो निष्ठुरो[3] मसृणताया अभावात्, विकटो विस्तीर्णो यः स्फुटाटोपः फणाडम्बरं तत्करणे दक्षं उत्कट-स्फुटकुटिलजटिलकर्कशविकटस्फुटाटोपकरणदक्षम् ॥

॥१०८॥ तथा लोहागरधम्ममाणधमधमेन्तघोसं[4] लोहाकरस्येव ध्मायमानस्य भस्त्राका[5] तेनोद्दीप्यमानस्य धमधमायमानस्य धम-धमेत्येवं शब्दायमानस्य घोषः शब्दो यस्य तत्तथा । इह च विशेष्यस्य[6] पूर्वनिपातः प्राकृतत्वादिति ॥ अणागलियतिव्वपयण्डरोसं अनाकलितो ऽपरिमितो[7] ऽनर्गलितो वा निरोद्धुमशक्यस्तीव्रः प्रचण्डो ऽतिप्रकृष्टो रोषो यस्य तत्तथा ॥ सरसरस्स त्ति लौकिकानुकरणभाषा ॥ पच्छि-

१ a f om. कचित्साक्षादुक्तानि । २ e f चंचलंत्योः । ३ a f निट्ठुरो । ४ a f °धमधमधमेंत° । ५ a f भस्त्राया, e भस्त्राया । ६ e विशेषणस्य । ७ f अप्रमितो ।

णेणं भाएलं[१] ति पुच्छेनेत्यर्थः॥ निकुट्टेमि त्ति निकुट्टयामि प्रहरिष्ये॥

॥ १११ ॥ उज्जलं ति उज्ज्वलां विपक्षलेशेनाप्यकलङ्किताम्। विपुलां शरीरव्यापकत्वात्। कर्कशां कर्कशद्रव्यमिवानिष्टाम्। प्रगाढां प्रकर्षवतीम्। चण्डां रौद्राम्। दुःखां[२] दुःखरूपां, न सुखामित्यर्थः। किमुक्तं भवति, दुरहियासं ति दुरधिसह्यामिति॥

॥ ११२ ॥ हारविराइयवच्छमित्यादौ[३] यावत्करणादिदं दृश्यम्[४]। कडगतुडियथम्भियभुयं[५] अङ्गदकुण्डलमट्ठगण्डतलकण्णपीढधारिं [विचित्तहत्थाभरणं[६]] विचित्तमालामउलिं कल्लाणगपवरवत्थपरिहियं [कल्लाणगपवरमल्लाणुलेवणधरं[७]] भासुरबोन्दिं[८] पलम्बवणमालाधरं दिव्वेणं वण्णेणं दिव्वेणं गन्धेणं दिव्वेणं फासेणं दिव्वेणं संघयणेणं दिव्वेणं संठाणेणं दिव्वाए इड्ढीए दिव्वाए जुईए दिव्वाए पभाए[९] दिव्वाए छायाए दिव्वाए अच्चीए दिव्वेणं तेएणं दिव्वाए लेसाए त्ति कण्ठ्यम्। नवरं कटकानि कङ्कणविशेषास्त्रुटितानि बाहुरक्षकास्ताभिरतिबहुत्वात्स्तम्भितौ[१०] स्तब्धीकृतौ भुजौ यस्य तत्तथा। अङ्गदे च केयूरे, कुण्डले च प्रतीते[११], मृष्टगण्डतले घृष्टगण्डे[१२] ये कर्णपीठाभिधाने कर्णाभरणे ते च धारयति यत्तत्तथा। तथा[१३]

१ a f भाविषं। २ c दुक्खा। ३ a c ॰वत्थम्। ४ Compare Or. § 33 on this passage. ५ a f ॰भुयं। ६ Probably an interpolation, as it is omitted in the following interpretation. ७ Possibly an interpolation, as it is omitted in the version of the interpretation given by MS. f, see below, note २ on pg. ४२। ८ a f भासुरबोंदिं। ९ c पहाए। १० a f ॰स्तंभितः। ११ c प्रतीतो। १२ e reads मृष्टगण्डतल कर्णं॰। १३ c नव।

विचित्रमालाप्रधानो मौलिर्मुकुटं मस्तकं वा यस्य तत्तथा । कल्याण-
कमनुपहतं[1] प्रवरं वस्त्रं परिहितं येन तत्तथा । [[2]कल्याणकानि
प्रवराणि माल्यानि कुसुमानि अनुलेपनानि च धारयति यत्तत्तथा] ।
भास्वरबोन्दीकं[3] दीप्तशरीरम् । प्रलम्बा या वनमाला आभरण-
विशेषस्तां धारयति यत्तत्तथा । दिव्येन वर्णेन युक्तमिति गम्यते ।
एवं सर्वत्र, नवरं ऋद्ध्या विमानवस्त्रभूषणादिकया । युत्या इष्ट-
परिवारादियोगेन । प्रभया प्रभावेन । छायया प्रतिबिम्बेन । अर्चिषा
दीप्तिज्वालया । तेजसा कान्त्या । लेश्यया आत्मपरिणामेन ॥ उद्यो-
तयत्प्रकाशयच्छोभयदिति ॥ प्रासादीयं चित्ताह्लादकं, दर्शनीयं
यत्पश्यच्चक्षुर्न श्राम्यति, अभिरूपं मनोज्ञं, प्रतिरूपं द्रष्टारं २ प्रति
रूपं यस्य ॥

॥११२॥ विकुर्व्य वैक्रियं कृत्वा ॥ अन्तरिक्षप्रतिपन्न आकाश-
स्थितः ॥ सकिङ्किणीकानि क्षुद्रघण्टिकोपेतानि ॥ सक्के देविन्दे इत्यादौ
यावत्करणादिदं दृश्यम्[4] । वज्जपाणी पुरन्दरे सयक्कऊ सहस्सक्खे
मघवं पागसासणे दाहिणड्ढलोगाहिवई बत्तीसविमाणसयसहस्सा-
हिवई एरावणवाहणे सुरिन्दे[5] अरयम्बरवत्थधरे[6] आलइयमालम-
उडे नवहेमचारुचित्तचञ्चलकुण्डलविलिहिज्जमाणगण्डे भासुरबोन्दी[7]
पलम्बवणमाले[8] सोहम्मे कप्पे सोहम्मवडिंसए[9] विमाणे सभाए
सोहम्माए त्ति शक्रादिशब्दानां च व्युत्पत्त्यर्थभेदेन भिन्नार्थता द्रष्ट-

---

१ a f अनुपंहतं । २ f omits this passage entirely. ३ a ॰बोदीकं ।
४ Compare Kap. § 14. ५ a f सुरेन्दे । ६ c ॰बरत्थ॰ ७ a f भासरबोंदी ।
८ e ॰मालधरे । ९ a f ॰वडेंसए ।

ध्या । तथाहि । शक्तियोगाच्छक्रः । देवानां परमेश्वरत्वाद्देवेन्द्रः । देवानां मध्ये राजमानत्वाच्छोभमानत्वाद्देवराजः[१] । वज्रपाणिः कुलिशकरः । पुरोऽसुरादिनगरविशेषस्तस्य दारणात्पुरन्दरः । तथा क्रतुशब्देनेह[२] प्रतिमा विवक्षितास्ततः कार्त्तिकश्रेष्ठित्वे शतं क्रतूनामभिग्रहविशेषाणां यस्यासौ शतक्रतुरिति चूर्णिकारव्याख्या । तथा पञ्चानां मन्त्रिशतानां सहस्रमक्ष्णां भवतीति तद्योगादसौ सहस्राक्षः । तथा मघशब्देनेह मेघा विवक्षितास्ते यस्य वशवर्त्तिनः सन्ति स मघवान् । तथा पाको नाम बलवांस्तस्य रिपुस्तच्छासनात्पाकशासनः । लोकस्यार्द्धमर्द्धलोको, दक्षिणो योऽर्द्धलोकः, तस्य[३] योऽधिपतिः स तथा । ऐरावणः ऐरावणो[४] हस्ती, स वाहनं यस्य स तथा । सुष्ठु[५] राजन्ते ये[६] ते सुरास्तेषामिन्द्रः प्रभुः सुरेन्द्रः, सुराणां देवीनां वा इन्द्रः सुरेन्द्रः । पूर्वं च देवेन्द्रत्वेन प्रतिपादितत्वादन्यथा वा पुनरुक्तपरिहारः कार्यः । अरजांसि निर्मलानि, अम्बरमाकाशं, तदच्छत्वेन यानि तान्यम्बराणि तानि वस्त्राणि, तानि[७] धारयति यः स तथा । आलिङ्गितमालमारोपितस्रग्मुकुटं[८] यस्य स तथा । नवे इव नवे[९] हेम्नः सुवर्णस्य सम्बन्धिनी चारुणी शोभने चित्रे चित्रवती चञ्चले ये कुण्डले[१०] ताभ्यां विलिख्यमानौ गण्डौ यस्य स तथा । शेषं प्रागिवेति ॥ सामानियत्रायस्त्रिंशमिह[११] यावत्करणादिदं दृश्यम् । तायत्तीसाए[१२] तायत्तीसगाणं[१२] चउण्हं लोगपालाणं अट्ठण्हं अग्ग-

१ a f राजमानत्वाच्छो० । २ e शब्दसमु० । ३ e om. ४ e ऐरावणः । ५ a e f सुष्ठु । ६ e थे for ये ते । ७ e om. ८ e मुकुटो । ९ e नव । १० a f कुण्डलो । ११ Compare Kap. § 11. १२ a f तावत्तीस० ।

महिसीणं सपरिवाराणं तिण्हं परिसाणं सत्तण्हं अणियाणं सत्तण्हं अणियाहिवईणं चउण्हं चउरासीणं[1] आयरक्खदेवसाहस्सीणं[2] ति।[3] तत्र चायस्त्रिंशाः पूज्या महत्तरकल्पाः। लोकपालाः पूर्वादिदिगधिपतयः सोमयमवरुणवैश्रवणाख्याः[4]। अग्रमहिष्यः प्रधानभार्याः, तत्परिवारः प्रत्येकं पञ्चसहस्राणि, सर्वमीलने[5] चत्वारिंशत्सहस्राणि। तिस्रः परिषदोऽभ्यन्तरा मध्यमा बाह्या च। सप्तानीकानि पदातिगजाश्वरथवृषभभेदात्पञ्चसांग्रामिकाणि गन्धर्वानीकं नाट्यानीकं चेति सप्त। अनीकाधिपतयश्च सप्तैव, प्रधानः पत्तिः प्रधानो गज एवमन्येऽपि॥ आत्मरक्षा[6] अङ्गरक्षास्तेषां चतस्रः सहस्राणां चतुरशीत्यः॥ आख्याति सामान्यतो, भाषते विशेषतः, एतदेव प्रज्ञापयति प्ररूपयतीति पदद्वयेन क्रमेणोच्यत इति॥ देवेण वेत्यादौ यावत्करणादेवं द्रष्टव्यम्। जक्खेण वा रक्खसेण वा किन्नरेण वा किम्पुरिसेण[7] वा महोरगेण वा गन्धव्वेण वा इति॥ इड्ढी इत्यादि यावत्करणादिदं दृश्यम्। जुई जसो बलं वीरियं पुरिसक्कारपरक्कमे त्ति॥ नाइं[8] भुज्जो करणयाए, न[9] नैव, आइं[10] ति निपातो वाक्यालङ्कारे ऽवधारणे वा, भूयः करणतायां पुनराचरणे न प्रवर्तिष्ये इति गम्यते॥

॥ ११६ ॥ जहा सङ्खे त्ति यथा शङ्खः श्रावको भगवत्यामभिहितस्तथायमपि वक्तव्यः। अयमभिप्रायः[11]। अन्यैः, पञ्चविधमभिगमं

---

१ Kap. § 14 has चउरासीईए as well as var. léc. चउरासीणं। २ c °साहस्सीणं। ३ e om. ४ e वैश्रमणा°। ५ a f om पञ्च° सर्व°। ६ c आत्मरक्षार्थमङ्गरक्षाः। ७ e किंपुरुसेण। ८ e नायं। ९ e om. १० c आयं। ११ a e f °प्रायोऽन्यो।

सचित्तद्रव्यव्युत्सर्गादिकं समवसरणप्रवेशे विदधति शङ्खः, पुनः पोषधिकत्वेन[1] सचेतनादिद्रव्याणामभावात्तत्र तत्त्यागमपि[2] पोषधिक[3] इति शङ्खेनोपमितः॥ यावत्करणादिदं द्रष्टव्यम्। जेणेव समणे भगवं महावीरे तेणेव उवागच्छइ, २त्ता समणं भगवं महावीरं तिक्खुत्तो आयाहिणं पयाहिणं करेइ, २त्ता वन्दइ नमंसइ, २त्ता[4] नच्चासन्ने नाइदूरे सुस्सूसमाणे[5] नमंसमाणे[6] अभिमुहे पञ्जलिउडे[7] पज्जुवासइ त्ति॥

॥११७॥ तए णं समणे ३ कामदेवस्स समणोवासयस्स तीसे य[8] इत आरभ्य औपपातिकाधीतं[9] सूत्रं तावद्वाच्यं यावद्धर्मकथा समाप्ता परिषद्[10] प्रतिगता। तच्चैवं सविशेषमुपदर्श्यते[11]। तए णं समणे भगवं महावीरे कामदेवस्स समणोवासयस्स तीसे य महइ-महालीयाए,[12] तस्याश्च महतिमहत्या[13] इत्यर्थः। इसिपरिसाए मुणिपरिसाए जइपरिसाए, तत्र पश्यन्तीति ऋषयो ऽवध्यादिज्ञानवन्तः, मुनयो वाचंयमाः, यतयो धर्मक्रियासु प्रयतमानाः अणेगसयाए अणेगसयवन्दपरिवाराए,[14] अनेकशतप्रमाणानि यानि वृन्दानि तानि[15] परिवारो यस्याः सा[16] तया। तस्या धर्मं परिकथयतीति सम्बन्धः। किम्भूतो भगवान्, ओहबले अइबले[17] महब्बले, ओघबलोऽव्यव-

१ a f पोसहिक॰, c पोसह॰। २ a f ॰भावात्तत्र तत्त्यागम्। ३ a f पोसहिक। ४ a f सर्वे ९ for २त्ता। ५ c सुस्सूसमाणे। ६ c om. ७ a f पंजलियडे। ८ After this, c adds महइमहालीयाए परिसाए। ९ See Or. § 56 १० a c only परि-सत्। ११ c ॰पदर्श्यते। १२ a f ॰महालयाए। १३ c महत्यो॰। १४ a f ॰वन्द॰ for ॰वन्द॰। १५ c om. १६ The reading of c is confused यस्यस्सा यस्यस्सा यावत्सदापरिवारवः।

च्छिन्नबलः, अतिबलो ऽतिक्रान्ताः[1] शेषपुरुषाः, सरति तिर्यग्बलः, महाबलो ऽप्रमितबलः। एतदेव प्रपञ्चयते। [2]अपरिमियबलविरियतेयमाहप्पकंतिजुत्ते, [अपरिमितानि[3] यानि बलादीनि तैर्युक्तो यः स तथा, तत्र] बलं शारीरः प्राणः, वीर्यं जीवप्रभवः, तेजो दीप्तिः, माहात्म्यं महानुभावता, कान्तिः काम्यता। सारयनवठणियमहुरनिग्घोसदुन्दुभिसरे[4] शरत्कालप्रभवाभिनवमेघशब्दवन्मधुरो निर्घोषो यस्य दुन्दुभेरिव च[5] स्वरो यस्य स तथा। उरे वित्थडाए[6] सरस्वत्येति सम्बन्धः। कण्ठे[7] पवट्टियाए[8] [गलविवरस्य[3] वर्तुलत्वात्। सिरे सङ्किलाए मूर्धनि सङ्कीर्णया आयामस्य मूर्ध्नि स्खलितत्वात्], अगरलाए[9] व्यक्ताक्षरयेत्यर्थः[10], अमम्मणाए[11] अनवरवच्यमानयेत्यर्थः[12]। सव्वक्खरसन्निवाइयाए[13] सर्वाक्षरसंयोगवत्या। पुण्णरत्ताए परिपूर्णमधुरया। सव्वभासाणुगामिणीए सरस्सईए भणित्य। जोयणनीहारिणा सरेणं योजनातिक्रामिणा शब्देन॥ अद्धमागहाए भासाए भासइ अरहा धम्मं परिकहेइ। अर्धमागधी भाषा यस्यां रसोर्लशौ मागध्यामित्यादिकं मागधभाषालक्षणं[14] परिपूर्णं नास्ति। भाषते सामान्येन

---

१ a e f अतिक्कांता (e अतिक्रांता) शेषपुरुषा सरति (f सरति) तिर्यग्बलः। २ From here the text of a e f is exceedingly confused and incorrect; I have restored it, as well as possible, according to the text of Or. § 56. ३ The portion in brackets in omitted is a and f. ४ e °थणणियमायर°, f °थणिय° for °ठणिय°। ५ e om. च। ६ After this e inserts wrongly the portion गलविवरस्य etc. in brackets. ७ a f कंठ, e कंट। ८ e पौवट्टीयाए (Skr. प्रवेष्टित)। ९ a f आगरलाए, e अगरभाए। १० e व्यक्ताक्षरघोषेत्यर्थः। ११ a e f अम्मणाए। १२ e अनवरवंचमान°, f अनवरवंचमान°। १३ a e f °सन्निवायाए। १४ e मागधी° (See Hem. IV, 288)।

भणति[1]। किंविधो भगवान्, अर्हन् पूजितो[2] पूजोचितः[3], अरहस्यो वा सर्वज्ञत्वात्। कं धर्मं श्रद्धेयज्ञेयानुष्ठेयवस्तु[4] श्रद्धानज्ञानानुष्ठान-रूपम्[4]। तथा परिकथयति अशेषविशेषं कथनेनेति। तथा तेसिं सव्वेसिं आरियमणारियाणं[5] अगिलाए धम्ममाइक्खइ। न केवलं ऋषिपर्षदादीनां ये वन्दनाद्यर्थमागतास्तेषां च सर्वेषामार्याणा-मार्यदेशोत्पन्नानामनार्याणां म्लेच्छानामग्लान्या अखेदेनेति॥ सा वि य णं अद्धमागहा भासा तेसिं आरियमणारियाणं[5] अप्पणो भासाए परिणामेणं परिणमइ[6]। स्वभाषापरिणामेनेत्यर्थः[7]। धर्म-कथामेव दर्शयति॥ अत्थि लोए अत्थि अलोए, एवं जीवा अजीवा, बन्धे मोक्खे, पुण्णे पावे, आसवे संवरे, वेयणा[8] निज्जरा[9]। एतेषा-मस्तित्वदर्शनेन शून्यज्ञाननिरात्माद्वैतैकान्तक्षणिकनित्यवादिनास्तिका-दिकुदर्शननिराकरणात् परिणामिवस्तुप्रतिपादनेन[10] सकलैहिकामु-ष्मिकक्रियाणामनवद्यत्वमावेदितम्॥ तथा अत्थि अरहन्ता[11] चक्कवट्टी, बलदेवा वासुदेवा, नरगा[12] नेरइया, तिरिक्खजोणिया तिरिक्ख-जोणिणीओ, मायापिया रिसओ, देवा देवलोया, सिद्धी सिद्धा, परिणिव्वाणे[13] परिणिव्वुया[14]। सिद्धिः[15] कृतकृत्यता, परिनिर्वाणं सकलकर्मकृतविकारविरहात्स्वास्थ्यमेव, सिद्धपरिनिर्वृतानामपि

१ c भणतिमि। २ a f पूजितपूजो०। ३ a पूजोचितः। ४ a c f श्रद्धय०, ०श्रद्धा-न०। ५ e [illegible]रियमणारियाणं। ६ f om. ७ f om. स्वभाषा। ८ a e f om., supplied from Ov. § 56. ९ c निज्जरे। १० c परिणामिवस्तु०। ११ c अरिहंता। १२ a f नरगा, c om. १३ a c f परिनिव्वाणे। १४ c परिनिव्वुया। १५ c सिद्ध।

विशेषो ऽवसेयः। तथा अत्थि पाणाइवाए मुसावाए अदिन्नादाणे[१] मेहुणे परिग्गहे, अत्थि[२] कोहे[३] माणे[३] माया लोभे पेज्जे[४] दोसे कलहे अब्भक्खाणे अरइरई पेसुन्ने परपरिवाए मायामोसे[५] मिच्छा-दंसणसल्ले, अत्थि पाणाइवायवेरमणे जाव[६] कोहविवेगे जाव मिच्छा-दंसणसल्लविवेगे। किं बहुना[७]। सव्वं अत्थिभावं अत्थि त्ति वयइ, सव्वं नत्थिभावं नत्थि त्ति वयइ। सुचिण्णा कम्मा सुचिण्णफला भवन्ति, सुचरिताः क्रियादानादिकाः सुचीर्णफलाः पुण्यफला भवन्तीत्यर्थः। दुच्चिण्णा[८] कम्मा दुच्चिण्णफला[८] भवन्ति। फुसइ पुण्णपावे, बध्नात्यात्मा शुभाशुभकर्मणी न पुनः साङ्ख्यमतेनेव न बध्यते। पच्चायन्ति जीवा, प्रत्यायन्ते[९] उत्पद्यन्त इत्यर्थः। सफले कल्लाणपावए, इष्टानिष्ट-फलं शुभाशुभं कर्मेत्यर्थः॥ धम्ममाइक्खइ, अनन्तरोक्तं ज्ञेयश्रद्धे-यज्ञानश्रद्धानरूपमाचष्टे[१०] इत्यर्थः॥ तथा इणमेव[११] निग्गन्थे पावयणे सच्चे, इदमेव प्रत्यक्षं नैर्ग्रन्थं प्रवचनं जिनशासनं सत्यं सद्भूतं कषायादिशुद्धत्वात्सुवर्णवत्[१२]। अणुत्तरे अविद्यमानप्रधानतरम्[१३]। केवलिए अद्वितीयम्। संसुद्धे[१४] निर्दोषम्। पडिपुण्णे सद्गुणभृतम्। नेयाउए नैयायिकं न्यायनिष्ठम्। सल्लगत्तणे[१५] मायादिशल्यकर्त्तनम्। सिद्धिमग्गे[१६] हितप्राप्तिपथः। मुत्तिमग्गे अहितविच्युतेरुपायः[१७]।

---

१ a f अदत्तादाणे, b अदिन्नादाणे। २ f om. ३ a f om. ४ e पिज्जे। ५ a f om. ६ a e f om, but required by Ov. § 56. ७ b बहुणा, as if it were part of the Prākrit quotation. ८ a f दुचिन्न°। ९ a f प्रत्याजायन्ते। १० e om. °यज्ञान°। ११ a f इणामेव। १२ a f कषादि°। १३ e °मार्ग प्रधान°। १४ a e f संसुद्धे। १५ a f सल्लगत्तणे। १६ e सिद्धमग्गे। १७ e °विच्युतेर्।

निव्वाणमग्गे[1] सिद्धिक्षेत्रावाप्तिपथः । परिनिव्वाणमग्गे कर्माभावप्रभवसुखोपायः । सव्वदुक्खप्पहीणमग्गे, सकलदुःखक्षयोपायः, इदमेव प्रवचनं फलतः प्ररूपयति ॥ इत्थं[2] ठिया जीवा सिज्झन्ति, निष्ठितार्थतया, बुज्झन्ति केवलितया[3], मुच्चन्ति कर्मभिः, परिणिव्वायन्ति[4] स्वस्थीभवन्ति । किमुक्तं भवति[5]। सव्वदुक्खाणमन्तं करेन्ति[6] । एगच्चा पुण एगे[7] भयन्तारो, एकार्चा अद्वितीयपूज्याः[8] संयमानुष्ठाने[9] वा असदृशी अर्चा शरीरं येषां ते एकार्चाः, ते पुनरेकैकेन[10] वा येन सिध्यन्ति, ते भयन्तारो निग्रन्थप्रवचनसेवका भदन्ता वा भट्टारका भयत्रातारो वा ॥ पुव्वकम्मावसेसेणं अन्नतरेसु देवलोगेसु देवत्ताए उववत्तारो भवन्ति महिड्ढिएसु महज्जुइएसु[11] महाजसेसु महाबलेसु महाणुभावेसु महासुक्खेसु दूरङ्गइएसु चिरट्ठिइएसु[12]। ते णं तत्थ देवा भवन्ति महिड्ढिया[13] जाव चिरट्ठिइया हारविराइयवच्छा[14] कडगतुडियथम्भियभुया[15] अङ्गदकुण्डलमट्ठगण्डतलकण्णपीढधारी[16] विचित्तहत्थाभरणा विचित्तमालामउली,[17] विचित्राणि विविधानि वा मउलि त्ति मुकुटविशेषः, [कल्लाणपवरवत्थपरिहिया[18]], कल्लाणगपवरमल्लाणुलेवणधरा[19] भासुरबोन्दी[20] पलम्बवणमालाधरा दिव्वेणं

१ a f सिज्झाय० । २ a f इत्थं । ३ e केवलतया । ४ a f परिनिव्वन्ति, e परिनिव्वायन्ति । ५ e भवतीति । ६ e करेंद । ७ e एग० । ८ a f अद्वितीयाः पू० । ९ a ०नुष्ठाने । १० a f पुनरेकेनैव शि न सिध्यन्ति । ११ e महज्जुइएसु । १२ a चिरट्ठिइसु । १३ a f om. १४ a e f ०वच्छा । १५ Compare the commentary to § 112. १६ a f ०अङ्गद० । १७ e विचित्त०; a e ०मउलिमउडा, f ०मउलि । १८ a f om. १९ a e f ०मल्लाणु० for ०मल्ला० । २० a f भासुरबोंदी ।

वण्णेणं दिव्वेणं गन्धेणं दिव्वेणं फासेणं दिव्वेणं सङ्घयणेणं दिव्वेणं संठाणेणं दिव्वाए इड्ढीए दिव्वाए जुईए दिव्वाए[1] पभाए[1] दिव्वाए छायाए दिव्वाए अच्चीए दिव्वेणं तेएणं दिव्वाए लेसाए दसदिसाओ[2] उज्जोएमाणा पभासेमाणा गइकल्लाणा[2] ठिइकल्लाणा आगमेसिभद्दा पासादीया दरिसणिज्जा अभिरूवा पडिरूवा ॥ तमाइक्खइ, यदिह धर्मफलं तदाख्याति ॥ तथा एवं खलु चउहिं ठाणेहिं जीवा नेरइयत्ताए कम्मं पकरेन्ति। एवमिति वक्ष्यमाणप्रकारेणेति। नेरइयत्ताए कम्मं पकरेत्ता नेरइएसु उववज्जन्ति। तं जहा। महारम्भयाए महापरिग्गहयाए[3] पञ्चेन्दियवहेणं कुणिमाहारेणं, कुणिमं ति मांसम् ॥ एवं च एएणं अभिलावेणं, तिरिक्खजोणिएसु, माइल्लयाए अलियवयणेणं उक्कुञ्चणयाए वञ्चणयाए। तत्र माया वञ्चनबुद्धिः, उत्कुञ्चनं मुग्धवञ्चनप्रवृत्तस्य[5] समीपवर्त्ति विदग्धचित्तरक्षणार्थं[6] क्षणमव्यापारतया अवस्थानं, वञ्चनं प्रतारणम्[7] ॥ मणूसेसु[8], पगइभद्दयाए पगइविणीययाए साणुक्कोसयाए अमच्छरियाए। प्रकृतिभद्रकता स्वभावत एवापरोपतापिता, अनुक्रोशो दया ॥ देवेसु, सरागसंजमेणं संजमासंजमेणं अकामनिज्जराए बालतवोकम्मेणं ॥ तमाइक्खइ। यदेवमुक्तरूपं नारकत्वादिनिबन्धनं तदाख्यातीत्यर्थः ॥ तथा

अह नरया गम्मन्ती[9] जे नरया जायवेयणा नरए।
सारीरमाणसाइं दुक्खाइं[10] तिरिक्खजोणीए ।२।

---

१ e om. २ e ॰दिसाए। ३ a e f जई॰। ४ e परिग्गहाए। ५ e मुग्धवञ्चनप्र॰। ६ e om. चित्त। ७ a. विप्रतारणं। ८ So a e f for the usual मणुस्सेसु। ९ e गमन्ती। १० a f दुक्खाइं, c दुक्खाइ।

माणुस्सं च अणिच्चं वाहिजरामरणवेयणापउरं ।
देवे[1] य देवलोए देविड्ढिं देवसोक्खाइं ।२।

देवांश्च देवलोकान्देवेषु देवसौख्यान्याख्यातीति ।

नरगं तिरिक्खजोणिं माणुसभावं च देवलोगं च ।
सिद्धिं च सिद्धवसहिं[2] छज्जीवणियं परिकहेइ ।३।
जह जीवा बज्झन्ती मुच्चन्ती जह य संकिलिस्सन्ति ।
जह दुक्खाणं अन्तं करेन्ति केई अपडिबद्धा ।४।
अट्टा[3] अट्टियचित्ता[4] जह जीवा दुक्खसागरमुवेन्ति ।
जह वेरग्गमुवगया कम्मसमुग्गं[5] विहाडेन्ति ।५।

आर्त्ताः शरीरतो दुःखिताः, आर्त्तितचित्ताः शोकादिपीडिताः, आर्त्तादाध्यानविशेषादार्त्तितचित्ता इति ॥

जह रागेण कडाणं कम्माणं पावओ फलविवागो ।
जह य परिहीणकम्मा सिद्धा सिद्धालयमुवेन्ति ।६।

अथानुष्ठेयानुष्ठानलक्षणं धर्ममाह ॥ तमेव धम्मं दुविहमाइक्खियं । येन धर्मेण सिद्धाः सिद्धालयमुपयान्ति[6] स एव धर्मो द्विविध आख्यात इत्यर्थः ॥ ॥ जहा । अगारधम्मं[7] च[7] अणगारधम्मं च[7] । अणगारधम्मो । इह खलु सव्वओ, सर्वात्मना धनधान्यादिप्रकारानाश्रित्य, सव्वत्ताए सर्वात्मना सर्वैरात्मपरिणामैरित्यर्थः । अगाराओ[8] अण-

---

१ ॰देवा। २ ॰ सिद्धिवसहिं। ३ अ । अट्टा, ॰ अट्टा। ४ अ । अट्टिय॰, ॰ अट्टिय॰। ५ अ । समुग्गं। ६ अ । उपयान्ति। ७ ॰ च। ८ ॰ आगारा॰।

गारियं पव्वइयस्स[१] सव्वाओ पाणाइवायाओ वेरमणं, एवं मुसावाय-अदिन्नादाणमेहुणपरिग्गहराईभोयणाओ[२] वेरमणम्॥ एवं अयमा-उसो[३] अणगारसामाइए धम्मे पन्नत्ते। एयस्स धम्मस्स सिक्खाए उव-ट्ठिए निग्गन्थे वा निग्गन्थी वा[४] विहरमाणे[५] आणाए[६] आराहए[७] भवइ॥ अगारधम्मं[८] दुवालसविहं आइक्खइ। तं जहा। पञ्चाणुव्वयाइं तिन्नि गुणव्वयाइं चत्तारि सिक्खावयाइं। पञ्च अणुव्वयाइं[९]। तं जहा। थूलाओ पाणाइवायाओ वेरमणं, एवं मुसावायाओ[१०] अदिन्ना-दाणाओ[१०] सदारसन्तोसे इच्छापरिमाणे। तिन्नि गुणव्वयाइं। तं जहा। अणट्ठादण्डवेरमणं दिसिव्वयं उवभोगपरिभोग[११] परिमाणं। चत्तारि सिक्खावयाइं। तं जहा। सामाइयं देसावगासियं पोस-होववासो अतिहिसंविभागो[१२]। अपच्छिममारणन्तियसंलेहणाझूसणा-आराहणा॥ अयमाउसो अगारसामाइये धम्मे पन्नत्ते। एयस्स धम्मस्स सिक्खाए[१३] उवट्ठिए समणोवासए समणोवासिया वा विहर-माणे आणाए आराहए भवइ॥ तए णं सा[१४] महइमहालिया मणू-सपरिसा समणस्स भगवओ महावीरस्स अन्तिए धम्मं सोच्चा निसम्म हट्ठतुट्ठ[१५] जाव हियया उट्ठाए उट्ठेइ, २त्ता समणं भगवं महावीरं तिक्खुत्तो आयाहिणपयाहिणं करेइ, २त्ता वन्दइ नमंसइ, २त्ता

१ a पव्वइयस्सेति। २ e मुसावायाओ वेरमणं अदिन्नादाणाओ वेरमणं मेहु-णाओ वेरमणं परिग्गहराईभोयणाओ वेरमणं। ३ a अयमाउसो। ४ e adds २ after वा। ५ a विहरमाणा। ६ f om. ७ a f आराहए। ८ e अगार°। ९ e add ति after अणुव्वयाइं। १० e adds वेरमणं। ११ a f °परिभोगपरिमाणं। १२ a f अहासंविभागो। १३ f सिक्खाए। १४ a e f से। १५ a f हट्ठतुट्ठा।

अत्येगइया मुण्डा[1] भवित्ता अगाराओ अणगारियं पव्वइया, अत्येगइया पंचाणुव्वइयं सत्तसिक्खावइयं दुवालसविहं गिहिधम्मं पडिवन्ना ॥ अवसेसा णं[2] परिसा समणं भगवं[3] महावीरं[3] वन्दित्ता नमंसित्ता[4] एवं वयासी । "सुयक्खाए णं, भन्ते, निग्गन्थे पावयणे, एवं सुपन्नत्ते, भेदतः, सुभासिए, वचनव्यक्तितः, सुविणीए, सुट्ठु शिष्येषु विनियोजनात्, सुभाविए तत्त्वभणनात्, अणुत्तरे, भन्ते, निग्गन्थे पावयणे । धम्मं[5] णं आइक्खमाणा[6] उवसमं[7] आइक्खह, क्रोधादिनिग्रहमित्यर्थः, उवसमं आइक्खमाणा विवेगं आइक्खह, बाह्यग्रन्थत्यागमित्यर्थः, विवेगं आइक्खमाणा वेरमणं आइक्खह, मनोनिवृत्तिमित्यर्थः, वेरमणं आइक्खमाणा अकरणं पावाणं कम्माणं आइक्खह, धर्मगुणप्रमादिरूपं ब्रूथेति[8] हृदयम्[9] । नत्थि णं अन्ने केइ समणे वा माहणे वा जे एरिसं धम्ममाइक्खित्तए, प्रभुरिति शेषः । किमङ्ग पुण एत्तो उत्तरतरं" । एवं वन्दित्ता जामेव दिसं[10] पाउब्भूया, तामेव दिसं[10] पडिगय त्ति ॥

॥ ११८ ॥ अट्टे[11] समट्टे त्ति । अर्थ्यतेऽर्थो ऽर्थ इत्यर्थः, अथवा अर्थः[12] भयोदितवस्तुसमर्थः सङ्गतः ॥ इमा इति कोमलामन्त्रणवचनम् ॥

॥ ११९ ॥ अज्जो त्ति आर्या[13] इत्येवमामन्त्र्यैवमवादीदिति ॥ वहन्ति त्ति यावत्करणादिदं दृश्यम् । खमन्ति तितिक्खन्ति ।

---

१ a f मुंडे। २ e om. ३ a f only १। ४ a f only २। ५ e adds एवं सुयवी before धर्म। ६ e आइक्खमाणे। ७ e adds से after उवसमं। ८ e सूयेति। ९ a f वृत्त्यं। १० e दिसिं। ११ a अट्टे समट्टे। १२ e om. १३ a f आर्येति। इति सिवम०, e आर्येः इति वचन०।

एकार्थाश्चैते विशेषव्याख्यानमप्येषामस्ति, तदन्यतो ऽवसेयमिति ॥

निक्खेवओ त्ति निगमनवाक्यं वाच्यम् । तच्चेदं "एवं खलु, जम्बू, समणेणं जाव सम्पत्तेणं दोच्चस्स अज्झयणस्स अयमट्ठे पण्णत्ते त्ति बेमि"॥

॥ इति उपासकदशानां द्वितीयाध्ययनविवरणं समाप्तम् ॥

## तृतीयमध्ययनम् ॥

अथ तृतीयं व्याख्यायते । तत्सुगममेव ॥ नवरं उक्खेवो[1] त्ति उपक्षेप उपोद्घातः तृतीयाध्ययनस्य वाच्यः । स चायम् । "जइ णं, भन्ते, समणेणं भगवया जाव सम्पत्तेणं उवासगदसाणं दोच्चस्स अज्झयणस्स अयमट्ठे पण्णत्ते, तच्चस्स[2] णं, भन्ते, के अट्ठे पण्णत्ते" इति कण्ठ्यश्चायम् ॥

॥ १२६ ॥ तथा[3] क्वचित्कोष्ठकं चैत्यमधीतं, क्वचिन्महाकामवनमिति[4] ॥

॥ १२७ ॥ श्यामा[5] नाम भार्या ॥

॥ १२८ ॥ तओ मंससोल्ले[6] त्ति त्रीणि मांसशूल्यकानि, शूले पच्यन्ते इति शूल्यानि, त्रीणि मांसखण्डानीत्यर्थः ॥ आदाणभरि-

१ a f उक्खेवउ, e उक्खेवो । २ a f om. from तच्चस्स up to पण्णत्ते । ३ e adds कोट्ठए त्ति । ४ a e f ॰धवनम्, the error is due to the great similarity of the old Nagari signs for *dh* and [illegible] ५ [illegible] prefixes धम्म नामं त्ति । ६ a f सोल्लए ।

यंपि त्ति आदाणमाद्रहणं[1], यदुदकतैलादिकमन्यतरद्रव्यपाकाया-ग्नावुत्ताप्यते[2] तद्भृते॥ कडाहंसि त्ति कटाहे लोहमयभाजनविशेषे॥ आर्द्रहयाम्युत्काथयामि[3]॥ आइचामि त्ति आसिञ्चामि॥

॥१४१॥ एस णं तए[4] विदरिसणे दिट्ठे त्ति एतच त्वया विदर्शनं विरूपाकारं[5] विभीषिकादि दृष्टमवलोकितमिति॥ भग-व्वए[6] त्ति भग्नव्रतः, स्थूलप्राणातिपातविरतेर्भावतो भग्नत्वात्, तद्वि-नाशार्थं कोपेनोद्धावनात्, सापराधस्यापि व्रतविषयीकृतत्वात्॥ भग्ननियमः कोपोदयेनोत्तरगुणस्य क्रोधाभिग्रहरूपस्य भग्नत्वात्॥ भग्नपोषधो ऽव्यापारपौषधभङ्गत्वात्॥ एयस्स त्ति द्वितीयार्थत्वात् षष्ठ्याः, एतमर्थमालोचय गुरुभ्यो निवेदय। यावत्करणात्पडि-क्कमाहि निवर्त्तस्व, निन्दाहि आत्मसाक्षिकां कुत्सां कुरु, गरिहाहि ...ा कुत्सां विधेहि, विउट्टाहि विचोटय तद्भावानुबन्धच्छेदं ..., विसोहेहि अतिचारमलक्षालनेन, अकरणयाए अब्भुट्ठेहि ...करणाभ्युपगमं कुरु, अहारिहं तवोकम्मं पायच्छित्तं पडिवज्जाहि त्ति प्रतीतम्। एतेन[7] च निशीथादिषु[8] गृहिणः प्रतिप्रायश्चित्तस्या-प्रतिपादनान्न तेषां प्रायश्चित्तमस्तीति ये प्रतिपद्यन्ते, तन्मतम-पास्तं[9] साधूद्देशेन गृहिप्रायश्चित्तस्य जीवितव्यवहारानुपातित्वात्[10]॥

॥ इति उपासकदशानां[11] तृतीयाध्ययनस्य[12] विवरणं समाप्तम्[13]॥

---

१ a c f °मादृहणं। २ a °सकाचायांवृताप्यते, I °शकायावृताप्यते। ३ a f कादृयाम्यु°, c कादृयाम्यु°। ४ c मु, text मुमे (Hem III, 91). ५ f नि-रूपाकारं। ६ c भग्ववद। ७ a f एतेन। ८ a निशीथा°। ९ c कपासं। १० a जीवनव°, e जीवनव्यव°, f जीमवव°। ११ a f °दशा। १२ a f °अयन। १३ a f c m

चतुर्थमध्ययनम् ॥

॥ १४५ ॥ अथ चतुर्थमारभ्यते[1]। तदपि सुगमम् ॥ नवरं चैत्यं कोष्ठकं, पुस्तकान्तरे काममहावनम्[2]। धन्या च भार्या ॥

॥ १४८ ॥ जमगसमगं ति यौगपद्येनेत्यर्थः ॥ सासे इत्यादौ यावत्करणादिदं दृश्यम्। सासे १, कासे २, जरे ३, दाहे ४, कुच्छिसूले ५, भगन्दरे ६, अरिसा ७, अजीरए[3] ८, दिट्ठी ९, मुद्धसूले १०, अकारए ११, अच्छिवेयणा १२, कण्णवेयणा १३, कण्डू १४, उदरे १५, कोढे १६। अकारकः अरोचकः ॥

॥ इति चतुर्थाध्ययनविवरणं[4] समाप्तम्[5] ॥

पञ्चममध्ययनम् ॥

पञ्चमं कण्ठ्यम् ॥

षष्ठमध्ययनम् ॥

षष्ठे किमपि लिख्यते ॥

॥ १६६ ॥ धम्मपण्णत्ति त्ति श्रुतधर्मप्ररूपणादर्शनं मतं सिद्धान्त इत्यर्थः ॥ उत्थाने उपविष्टः सन् यदूर्ध्वो भवति ॥ कर्म गमनादिकम् ॥ बलं शारीरम् ॥ वीर्यं जीवप्रभवम् ॥ पुरुषकारः[6] पुरुषताभिमानः, पराक्रमः स एव ॥ सम्पादितस्वप्रयोजनः इति उपदर्शनेवा-

---

१ c चतुर्थमध्ययनमारभ्यते। २ ° f °वनम्। ३ e अजीरये। ४ ° f चतुर्थं।
५ a f om. ६ c पुरुषाकारः।

विकल्पे[1], माल्येनतुल्यानादि जीवानां, एतस्य पुरुषार्थाप्रसाधक-त्वात्[2], तदसाधकत्वं[3] च पुरुषकारसद्भावे ऽपि पुरुषार्थसिध्यनुपलम्भात् ॥ एवं च नियताः सर्वभावाः । यैर्यथा भवितव्यं, ते तथैव भवन्ति, न पुरुषकारबलादन्यथा[4] कर्तुं शक्यन्ते[5] इति । आह च ।

प्राप्तव्यो नियतिबलाश्रयेण योऽर्थः
सो ऽवश्यं भवति नृणां शुभो ऽशुभो वा ।
भूतानां महति कृते ऽपि हि प्रयत्ने
नाभाव्यं भवति न भाविनो ऽस्ति नाशः ॥

तथा ।

नहि भवति यन्नभाव्यं, भवति च भाव्यं विनापि यत्नेन ।
करतलगतमपि[6] नश्यति यस्य तु भवितव्यता नास्ति ॥

इति ॥ मङ्कुलि[7] त्ति असुन्दरा धर्मप्रज्ञप्तिः श्रुतधर्मप्ररूपणा । किंस्वरूपामित्याह अस्तीत्यादि ॥ अनियताः सर्वभावाः उत्थानादेर्भवन्ति, तदभावाच्च भवन्तीति कृत्वैवंस्वरूपा ॥

॥ १६७–१६८ ॥ ततो ऽसौ कुण्डकोलिकः तं देवमेवमवादीत् । यदि गोशालकस्य[8] सुन्दरो धर्मो, "नास्ति कर्मादीत्यतो नियताः सर्वभावाः" इत्येवंरूपो, मङ्कुलश्च महावीरधर्मो "ऽस्ति कर्मादीत्यनियताः सर्वभावाः" इत्येवं स्वरूपः, इत्येवं तन्मतमनूद्य

---

१ A, I इतिपदवर्जितोऽयं [illegible] । २ C ॰र्थप्रसाध॰ । ३ C तदसाधकं च । ४ C [illegible] । ५ C [illegible] इति । ६ C, D, E [illegible] न नश्यति यस्य तु भवि॰ ना॰ । ७ A, I [illegible] ति । ८ A, C, I [illegible] ।

कुण्डकोलिकस्तन्मतदूषणाय विकल्पद्वयं कुर्वन्नाह । तुमे एमित्यादिपूर्ववाक्ये[1] यदीति पदोपादानादेतस्य वाक्यस्यादौ तदेति पदं द्रष्टव्यं इति । त्वयायं दिव्यो देवर्ध्यादिगुणः केन हेतुना लब्धः, किमुत्थानादिना, उदाहु त्ति अहोस्वित्[2] अनुत्थानादिना तपोब्रह्मचर्यादीनामकरणेनेति भावः । यद्युत्थानादेरभावेनेति पक्षो गोशालकमताश्रितत्वाद् भवतः, तदा येषां जीवानां नास्त्युत्थानादि तपश्चरणकरणमित्यर्थः, ते इति जीवाः किं न देवाः ?। पृच्छतो ऽयमभिप्रायः । यथा त्वं पुरुषकारं विना देवः संवृत्त स्वकीयाभ्युपगमतः, एवं सर्वजीवा ये उत्थानादिवर्जितास्ते देवाः प्राप्नुवन्ति, न चैतदेवमिष्टमित्युत्थानाद्यपलापपक्षे दूषणम् । अथ त्वयेयं ऋद्धिरुत्थानादिना[3] लब्धा । ततो यद्वदसि "सुन्दरा गोशालकप्रज्ञप्तिरसुन्दरा[4] महावीरप्रज्ञप्तिः" इति, तत्ते तव मिथ्यावचनं भवति[5] तस्य व्यभिचारादिति ॥

॥ १७० ॥ ततो ऽसौ देवस्तेनैवमुक्तः सन् शङ्कितः संशयवान् जातः, "किं गोशालकमतं[6] सत्यमुत महावीरमतम्"?। महावीरमतस्य[7] युक्तितो ऽनेन प्रतिष्ठितत्वादेवविधविकल्पवान् संवृत्त इत्यर्थः ॥ काङ्क्षितो महावीरमतमपि[8] साध्वेतद्युक्त्युपेतत्वादिति[9] विकल्पवान् संवृत्त इत्यर्थ ॥ यावत्करणाद्विदमापन्नो[10] मतिभेदमुपागतो गोशालकमतमेव[11] साध्विति निश्चयादपोढत्वात् ॥ तदा कलुषं समापन्नः

१ २ f षमित्यादौ पू० । २ e f •स्वित् । ३ २ f ऋद्धिरुपस्थानादिना । ४ e गोमालक० । ५ a f भवतेव । ६ e महावीरस्य, om मत । ७ e ममाधि । ८ ० f •तुपपेतत्वादिति । ९ c •भेदसमापन्नो ।

प्राक्तननिश्चयविपर्ययलक्षणं गोशालमतानुसारिणां मतेन मिथ्यात्वं प्राप्त इत्यर्थः । अथवा कलुषभावं जितो ऽहमनेनेति खेदरूपमापन्न इति ॥ नो संचाएइ[1] त्ति न शक्नोति । पामोक्खं ति प्रमोचमुत्तरं भणितुमिति ॥

१७४ ॥ गिहमज्झावसन्ता[2] णं ति गृहं[3] अध्यावसन्तो, णमिति अलङ्कारे[4] । अन्ययूथिकान् अर्थैर्जीवादिभिः सूत्राभिधेयैर्वा । आन्वयव्यतिरेकलक्षणैः । प्रश्नैश्च परप्रश्नणीयपदार्थैः[5] । कारणैस्तमाचरूपैः । व्याकरणैश्च परेण प्रश्नितस्योत्तरदानरूपैः ॥ निप्पट्ठपसिणवागरणे[6] त्ति निरस्तानि स्पष्टानि व्यक्तानि[7] प्रश्नव्याकरणानि येषां, ते निःस्पष्टप्रश्नव्याकरणाः[8], प्राकृतत्वाद्वा णिप्पिट्ठ-प्रश्नव्याकरणास्तान् कुर्वन्ति ॥ सक्का पुण त्ति शक्या एव ॥ हे आर्याः श्रमणैरन्ययूथिका निःस्पष्टप्रश्नव्याकरणाः कर्तुम् ॥

॥ इति षष्ठं विवरणतः समाप्तम् ॥

सप्तममध्ययनम् ।

॥ १८१ ॥ सप्तमं सुगममेव, नवरं आजीविओवासए त्ति आजीविका गोशालकशिष्याः, तेषामुपासक आजीविकोपासकः ॥ लब्धार्थः श्रवणतो, गृहीतार्थो बोधतः, पृष्टार्थः संशये सति, विनिश्चितार्थ उत्तरलाभे सति ॥

१ a f संचाएन । २ f गिहिमज्झा॰ । ३ e गृहमध्यावसंतो । ४ a f om. वाक्य । ५ e ॰प्रश्नीय॰ । ६ e निप्पिट्ठपसिण॰ । ७ e adds व्याकरणानि after व्यक्तानि । ८ e निस्पष्ट॰ ।

॥ १८४ ॥ दिन्नभइभत्तवेयण[1] त्ति दत्तं भृतिभक्तरूपं द्रव्यभोजनलक्षणं[2] वेतनं मूल्यं येषां ते तथा ॥ कल्लाकल्लिं[3] ति प्रतिप्रभातम् ॥ बहून् करकान्वार्घटिकाः, वारकांश्च गडुकान्, पिठरकाः स्थालीः, घटकान्प्रतीतान्, अर्द्धघटकांश्च घटार्द्धमानान्, कलशकानाकारविशेषवतो[4] बृहद्घटकान्, अलिञ्जराणि[5] च महदुदकभाजनविशेषान्, जम्बूलकांश्च लोकरूढ्यावसेयान्,[6] उष्ट्रिकांश्च[7] सुरातैलादिभाजनविशेषान् ॥

॥ १८७ ॥ एहिइ त्ति[8] एष्यति ॥ इहं ति अस्मिन्नगरे ॥ महामाहणे त्ति 'मा[9] हन्मि' न हन्मीत्यर्थः, आत्मना वा हनननिवृत्तः परं प्रति 'मा हन' इत्येवमाचष्टे यः स माहनः । स एव मनःप्रभृतिकरणादिभिराजन्म सूक्ष्मादिभेदभिन्नजीवहनननिवृत्तत्वान्महान्माहनो महामाहनः ॥ उप्पन्ने आवरणक्षयेणाविर्भूते ज्ञानदर्शने धारयति यः स तथा ॥ अत एवातीतप्रत्युत्पन्नानागतज्ञापकः[10] ॥ अरह त्ति अर्हन्महाप्रातिहार्यरूपपूजार्हत्वात्,[11] अविद्यमानं वा रह[12] एकान्तः सर्वज्ञत्वाद्यस्य सो ऽरहाः[13] ॥ जिणो रागादिजेतृत्वात् ॥ केवलानि परिपूर्णानि शुद्धान्यनन्तानि वा ज्ञानादीनि यस्य सन्ति स केवली ॥ अतीतादिज्ञानेऽपि सर्वज्ञानं प्रतिशङ्का स्यादित्याह, सर्वज्ञः साकारोपयोगसामर्थ्यात्, सर्वदर्शी अनाकारोपयोगसाम-

---

१ a c f दिन्न० । २ e द्रव्यभोजन० । ३ a f ०कल्लि त्ति, c कल्लिं त्ति । ४ a c e बृहद्घटका० । ५ a f अरंजराणि । ६ e ०रूढ्यवसेयान् । ७ e उष्ट्रिकांश्च । ८ a c f एहि त्ति । ९ a f om. from मा हन्मि down to माहन incl., beginning with सूक्ष्मादि० । १० a f ०प्रत्युत्पन्नानाग० ; a e f ज्ञापकः । ११ c reads अर्हन्महाप्रातिहार्यरूपपूजा अर्हत्वात् । १२ c रहं । १३ e अरहा ।

ध्यादिति ॥ तथा तेल्लोक्कवहियमहियपूइए त्ति त्रैलोक्येन त्रिलोकवासिना जनेन, वहिय त्ति समग्रैश्वर्याद्यतिशयसन्दोहदर्शनसमाकुलचेतसा[1] हर्षभरनिर्भरेण प्रबलकुतूहलबलादनिमिषलोचनेनावलोकितः, महिय त्ति सेव्यतया वाञ्छितः, पूजितश्च पुष्पादिभिर्यः स तथा ॥ एतदेव व्यनक्ति । सदेवा[2] मनुजासुरा[3] यस्मिंस्स सदेवमनुजासुरस्तस्य लोकस्य प्रजायाः, अर्चनीयः पुष्पादिभिः,[4] वन्दनीयः स्तुतिभिः, सत्करणीय[5] आदरणीयः, सम्माननीयोऽभ्युत्थानादिप्रतिपत्तिभिः, कल्याणं मङ्गलं दैवतं चैत्यमित्येवं बुद्ध्या पर्युपासनीय इति ॥ तच्चकम्मे[6] त्ति तथ्यानि सत्फलाव्यभिचारितया[7] यानि कर्माणि क्रियास्तत्सम्पदा तत्सम्पद्या यः सम्प्रयुक्तो[8] युक्तः स तथा ॥

॥ १८४ ॥ कयमित्यत्र यावत्करणात्पाउप्पभायाए रयणीए इत्यादिर्जलन्ते[10] सूरिए इत्येतदन्तः प्रभातवर्णको[11] दृश्यः, स चोत्क्षिप्तज्ञातसूत्राख्येयः[12] ॥

॥ १८५ ॥ वायाहयग[13] त्ति वाताहतं वायुनेषच्छोषमानीतमि-

---

१ c समग्रैश्वर्द° । २ c °सदेवमनुजा° । ३ a f मनुजासुराः । ४ c inserts पूजनीयः after पुष्पादिभिः । ५ c सत्कारणीयः । ६ a f तच्चकम्म । ७ c reads °सत्फलान्यभिचारितया । ८ c om. ९ c संप्रयुक्त, om. युक्त । १० c इत्यादि जलन्ते । ११ The conclusion of the varṇaka, as here indicated, presupposes a somewhat different recension from that usually found in Jain works, e. g., in Kap. § 59, Nay. § 34, where the conclusion runs thus. उट्ठे सहस्सरस्सिंमि दिणयरे तेयसा जलन्ते । १२ a f °ज्ञातवृत्ता°, c °ज्ञातसूत्रा° । १३ a वायहयं. c वाताहतं ।

त्यर्थः ॥ कोलालभण्डं ति कुलालाः कुम्भकाराः, तेषामिदं कौलालं, तच्च तद्भाण्डं च पण्यं भाजनं वा कौलालभाण्डम्[१] ॥

॥ १९८,१९९ ॥ "एतत्किं पुरुषकारेणेतरथा वा क्रियते" इति भगवता पृष्टे, स गोशालकमतेन नियतिवादलक्षणेन[२] भावितत्वात्पुरुषकारेणेत्युत्तरदाने च स्वमतक्षतिपरमताभ्यनुज्ञानलक्षणं दोषमाकलयन् "अपुरुषकारेण" इत्युवाच ॥

॥ २०० ॥ ततस्तदभ्युपगतनियतिमतनिरासाय पुनः प्रश्नयाह "सद्दालपुत्त" इत्यादि । यदि तव कश्चित्पुरुषो वाताहतं वा आममित्यर्थः, पक्केल्लयं व त्ति पक्वं वा अग्निना कृतपाकं अपहरेद्वा[३] चोरयेत्, विकिरेद्वा[४] इतस्ततो विक्षिपेत्, भिन्द्याद्वा[५] काणताकरणेन, आच्छिन्द्याद्वा[६] हस्तादुद्दालनेन, पाठान्तरेण विच्छिन्द्याद्वा विविधप्रकारैश्छेदं कुर्यादित्यर्थः, परिष्ठापयेद्वा बहिर्नीत्वा त्यजेदिति । वत्तेज्जासि[७] त्ति निर्वर्त्तयसि ॥ आओसेज्जा[८] व त्ति आक्रोशयामि वा 'मृतोऽसि त्वम्' इत्यादिभिः शापैरभिशपामि, हन्मि वा दण्डादिना, बध्नामि वा रज्ज्वादिना, तर्जयामि[९] वा 'ज्ञास्यसि रे दुराचार' इत्यादिभिर्वचनविशेषैः, ताडयामि वा चपेटादिना, निच्छोटयामि[१०] वा धनादित्याजनेन, निर्भर्त्सयामि वा परुषवचनैः,[११] अकाल एव च जीविताद्वा व्यपरोपयामि मार-

---

१ a f कोलालं भाण्ड । २ e नियतवाद° । ३ e अपहरेद्वा । ४ conjectural (or विकिरेद्वा), a e f विकरेद्वा । ५ e pref. भिंदिज्ज त्ति । ६ e pref. अच्छिंदेज्ज त्ति । ७ e निवर्त्तेज्जासि । ८ a e f आउसेज्जा । ९ a f तर्जेयामि । १० a e f निःछोटयामि । ११ e परुषव° ।

यामीत्यर्थः ॥ इत्येवं भगवांस्तं सद्दालपुत्रं स्ववचनेन पुरुषकाराभ्युपगमं[1] ग्राहयित्वा तन्मतविघटनायाह "सद्दालपुत्त" इत्यादि । न खलु तव भाण्डं कश्चिदपहरति, न च त्वं तमाक्रोशयसि, यदि मन्यत[2] एव नास्त्युत्थानादि । अथ कश्चित्तदपहरति, त्वं च तमाक्रोशयसि । तत एवमभ्युपगमे सति यद्वदसि "नास्त्युत्थानादि" इति,[3] तत्ते मिथ्या असत्यमित्यर्थः ॥

॥ २०५, २०८ ॥ तए णं सा अग्गिमित्ता इत्यादि । ततः सा अग्निमित्रा भार्या सद्दालपुत्रस्य श्रमणोपासकस्य तथेति एतमर्थं[4] विनयेन प्रतिशृणोति । स्नाता च स्नाता । कृतबलिकर्मा[5] बलिकर्म लोकरूढम् । कृतकौतुकमङ्गलप्रायश्चित्ता कौतुकं मषीपुण्ड्रादि मङ्गलं दध्यक्षतचन्दनादि, एते एव[6] प्रायश्चित्तमिव[7] प्रायश्चित्तं दुःस्वप्नादिप्रतिघातकत्वेनावश्यं कार्यत्वादिति । शुद्धात्मा वैषिकाणि[8] वेषार्हाणि मङ्गल्यानि प्रवरवस्त्राणि परिहिता । अल्पमहार्घाभरणालङ्कृतशरीरा ॥ चेटिकाचक्रवालपरिकीर्णा ॥ पुस्तकान्तरे यानवर्णको दृश्यते । स चैवं सव्याख्यानोऽवमेयः । लहुकरणजुत्तजोइयं लघुकरणेन दक्षत्वेन ये युक्ताः पुरुषास्तैर्योजितं यन्त्रयूपादिभिः[9] सम्बन्धितं यत्तत्तथा । तथा समखुरवालिहाणसमलिहियसिङ्गएहिं समखुरवालिधानौ तुल्यशफपुच्छौ समे लिखिते चोल्लिखिते[10] शृङ्गे ययोस्तौ तथा[11]

---

[1] e पुरुषकारा° । [2] e मन्यमेव । [3] e om. इति । [4] e मतदर्थं । [5] a f om. [6] e च । [7] a e f प्रायश्चित्तमिव । [8] e वैषदिकाणि । [9] e यन्त्रकपादिभिः । [10] c र्योल्लिखिते । [11] e adds गो च यो गो after तथा ।

ताभ्यां गोयुवभ्यामिति[१] सम्बन्धः । जम्बूणयामयकलावजोत्तपइवि-सिट्ठएहिं[२] जाम्बूनदमयौ कलापौ ग्रीवाभरणविशेषौ योक्त्रे च कण्ठबन्धनरज्जू[३] प्रतिविशिष्टे शोभने ययोस्तौ तथा ताभ्याम् । रय-यामयघण्टसुत्तरज्जुगवरकञ्चणखइयनत्थापग्गहोग्गहियएहिं[४] रजत-मय्यौ रूप्यविकारौ घण्टे ययोस्तौ तथा, सूत्ररज्जुके कार्पासिक-सूत्रमय्यौ ये वरकाञ्चनखचिते नस्ते नासारज्जू तयोः प्रग्रहेण रश्मिनावगृहीतकौ च बद्धौ यौ तौ तथा ताभ्याम् । नीलुप्प-लकयामेलएहिं[५] नीलोत्पलकृतशेखराभ्याम् । पवरगोणजुवाणएहिं । नाणामणिकणगघण्टियाजालपरिगयम् । सुजायजुगजुत्तउज्जुगपस-त्थसुविरइयनिम्मियं[६] सुजातं[७] सुजातदारुमयं युगं यूपः युक्तं सङ्गतं ऋजुकं सरलं सुविरचित सुघटितं निर्मितं निवेशितं यत्र तत्तथा । जुत्तामेव धम्मियं जाणप्पवरं उवट्ठवेह युक्तमेव सम्बद्ध-मेव[८] गोयुवभ्यामिति[९] सम्बन्ध इति ॥

॥ २१८ ॥ महागोवेत्यादि गोपो गोरक्षकः, स चेतरगोरक्ष-केभ्योऽतिविशिष्टत्वान्महानिति महागोपः ॥ नस्सत इति सन्मा-र्गाच्च्यवमानान् । विनस्सत इत्यनेकशो म्रियमाणाम् । खाय-मानान् मृगादिभावे व्याघ्रादिभिः । छिद्यमानाम् मनुष्यादिभावे

---

१ e ग॰ त्थं गोयुवाभ्यामिति । २ a f ॰पविमिट्ठएहिं । ३ c रज्जुरति॰ । ४ A c f ॰चविणद्धय (॰ घण्ट) घण्टाठोगविएहिं । ५ a c f ॰मेलयहिं । ६ c ॰निम्मयं । ७ B [ ref. सुजाय । ८ c ॰बंधमेव । ९ a c f गोयुवाभ्यामिति ।

खड्गादिना। भिद्यमानान्[१] कुन्तादिना[२]। लुप्यमानान् कर्णना-सादिछेदनेन[३]। विलुप्यमानान् बाह्योपध्यपहारतः[४]। गो[५] इवेति गम्यते॥ निव्वाणमहावाडं[६] ति सिद्धिमहागोस्थानविशेषम्॥ सा-हत्थे त्ति स्वहस्तेनेव[७], स्वहस्तेन साक्षादित्यर्थः॥ महासार्थवाहा-लापकानन्तरं पुस्तकान्तरे इदमपरमधीयते। "आगए णं, देवा-णुप्पिया, इहं महाधम्मकही[८]"। "के णं, देवाणुप्पिया, महा-धम्मकही[८]?"। "समणे भगवं महावीरे महाधम्मकही"। "से केणट्ठेणं समणे भगवं महावीरे महाधम्मकही[८]?"। "एवं खलु, सद्दालपुत्ता, समणे भगवं महावीरे महइमहालयंसि[९] संसारंसि बहवे जीवे[१०] नस्समाणे जाव विलुप्पमाणे उम्मग्गपडिवन्ने सप्प-हविप्पणट्ठे मिच्छत्तबलाभिभूए अट्ठविहकम्मतमपडलपडोच्छन्ने[११] अट्ठेहि य हेऊहि य पसिणेहि य कारणेहि[१२] य वागरणेहि य चाउरन्ताओ संसारकन्ताराओ साहत्थिं नित्थारेइ। से तेणट्ठेणं, सद्दालपुत्ता, समणे भगवं महावीरे महाधम्मकहि[१३]" त्ति। कण्ठ्यो ऽयम्, नवरं जीवानां नश्यदादिविशेषणहेतुदर्शनायाह[१४] उम्मग्गे-त्यादि। तत्रोन्मार्गप्रतिपन्नानाश्रितकुदृष्टिशासनात्, सत्पथविप्रनष्टा-नयनाजिनशासनात्[१५]। एतदेव कथमित्याह। मिथ्यात्वबलाभिभू-तान्, तथाष्टविधकर्मैव तमः, पडलमन्धकारसमूहः, तेन प्रत्यवच्छ-

---

१ a छिद्यमानान्। २ e adds भिद्यमानान्। ३ e कर्णनासादि°। ४ e बाह्योपध्यपहारतः। ५ a f गा, e गांव। ६ e °महावाडं। ७ e सहत्थेनैव। ८ e °धम्मकहा। ९ e °महालियंसि। १० a f om. जीवे। ११ e पडोच्छन्ने। १२ a f कारणेहि। १३ e °धम्मकह। १४ e °हेतुं दर्श°। १५ a °त्युक्तजिन°।

